नीयं वा एतद्वर्धयति[1] यत्पशुश्रपणं करोति त्वामु ते[2] दधिरे प्रथमं विचक्ष्यमिति मेध्यमेवैनं यज्ञियं करोति जातवेदो वपया गच्छ देवानिति स्वर्गमेवैनं लोकं गमयति यद्वा ऋषीणां च देवानां च यज्ञस्यापूतमासीत्तदेतैरपुनत यदेवास्य यज्ञस्यापूतं तदेतैः पुनीत आव्यं वा एतैस्तेऽपाजयंस्तदपाव्यानामपाव्यत्वमाव्यमेवैतैरपजयति ॥ ९॥

cf TS 3 1, 5

तृतीयस्यां[3] वै दिवि सोम आसीत्तं[4] गायत्र्याहरत्तस्य पर्णमच्छिद्यत स[5] पर्णो[6] ऽभवत्तत्पर्णस्य पर्णत्वं तस्मात्सर्वे वृक्षाः पर्णवन्तोऽथैष एवं पर्ण उच्यते यत्पर्णशाखा भवति तमेव सोममवरुन्द्धे देवा वै ब्रह्मन्समवदन्त तत्पर्ण उपाशृणोत्सुश्रवा वै नामैष न बधिरो भवति य एवं वेद यत्पर्णशाखया प्रापयति ब्रह्मणैवैनाः[7] प्रापयति प्रजापतिः पशूनसृजत तानय[8] देवो ऽभ्यमन्यत[9] ते शम्याशमयत्तच्छम्याः शमीत्वं यच्छमीशाखया प्रापयति शान्त्या अपां वा एतदोषधीनां तेजो यद्दर्भा यद्दर्भपिञ्जूलैः प्रापयत्यपामेवैना ओषधीनां तेजसा प्रापयतीषे[10] त्वोर्जे[11] त्वेतीषमेवोर्जं यज्ञे दधाति वायवस्थेति वायुर्वा अन्तरिक्षस्याध्यक्षो ऽन्तरिक्षदेवत्याः पशवो वायुरेवैनानन्तरिक्षाय परिददाति प्र वा एनानेतदाकरोति यद्वायवस्थेत्याहारण्यस्येव[12] हि वायुरुपायवस्थेति[13] यजमानायैव पशूनपाकरोति देवो वस्सविता प्रापयत्विति प्रसूत्यै श्रेष्ठतमाय कर्मण इति यज्ञो वै श्रेष्ठ-

---

1 So corr Ch मतद्वयर्धयति 2 So corr Ch nicht deutlich त्वो oder त्यो त्वो त्यो, aber vgl den Vers oben im vorhergehenden Capitel 3 Dies Capitel findet sich auch in T1, welche Handschrift daher hier verglichen ist, die Accente sind nach T1 gesetzt 4 Ch ता, T1 त्त Kap S 46, 8 = T1, ohne Accent. 5 So T1, desgl Kap S 46, 8, ohne Accent, Ch सो 6 Der Accent fehlt in T1 und ist von mir ergänzt 7 So T1, Ch ैन, Kap S 46, 8 ैना 8 So T1, desgl Kap S 46, 8, ohne Accent, Ch तानयन्दे॰ 9 So corr mit Caland, T1 देवेभ्यो मन्येत, Ch देवेभ्यो मन्यत, desgl Kap S 10 So corr Ch तोषो, T1 यति षे, Kap S 46, 8 तीषे 11 Ch त्वाऊँ, Kap S 46, 8 त्वोर्जे त्वेतीषमो॰ 12 So T1, Ch यद्वायवस्थे॰ 13 So T1, Ch पायवास्थे॰

तमं कर्माप्यायध्वमघ्न्या देवभागमिति वत्सेभ्यश्च वा एतां मनुष्येभ्यश्च पुराप्यायन्ते[1] ऽथैतर्हि देवेभ्य एवैना आप्याययति[2] प्रजावतीरनमीवा[3] अयक्ष्मा इति प्रजावतीरेवैना अनमीवा[4] अयक्ष्माः करोति ॥ मा वस्स्तेन[5] ईशत माघशंस इत्याशिषमेवाशास्ते परि वो रुद्रस्य हेतिर्वृणक्त्विति रुद्रमेव पशुभिः परिवृणक्त्यघातुको ऽस्य रुद्रः पशून्भवति[6] यस्यैवं विदुषो यश्चैवं[7] विद्वान्हविषे गाः प्रापयति ध्रुवा अस्मिन्गोपतौ स्यातेति दृंहत्येवैना बह्वीरिति भूमानमेवैना गमयति यजमानस्य पशून्पाहीति यजमानस्य पशूनां गोपीथाय प्रतीचीं शाखामुपगूहति तस्माद्ग्राम्याः[8] पशवस्सायमारण्याद्ग्राममायन्ति[9] यत्पराचीमुपगूहेदरण्ये हीयेरन्[10] ॥ १० ॥

cf Kap S 46, 8, Maitr S 4, 1, 1, TBr 3, 2, 1.

इत्येकोत्तरशतशाखाध्वर्युप्रभेदभिन्ने श्रीमद्यजुर्वेदे काठके चरकशाखायां मध्यमिकायां पात्नीवतं नाम त्रिंशं स्थानकं परिपूर्णम् ॥ संपूर्णा चेयं मध्यमिका ॥ शुभमस्तु ॥ शुभमस्तु ॥ सर्वजगतास् ॥[11]

---

[1] So T1, desgl Kap S 46, 8, ohne Accent, Ch पुराप्यायते [2] So T1, desgl Kap S 46, 8, ohne Accent, Ch आप्याययति [3] So T1, Ch मीव [4] So T1, Ch मीव [5] So T1, Ch मा नस्स्तेन, Kap S 46, 8 मा वस्तेन [6] Ch पशुर्भवति [7] So corr Ch यश्चैव, T1 यश्चैवं, Kap S 46, 8 यश्चैव [8] In T1 eine kleine Lücke aus diesem Grunde ist der Accent von mir ergänzt für die Worte शाखया. पशवस्सायमारण्या॰ [9] Ch ग्राममायान्ति, T1 ग्राममायन्ति, Kap S 46, 8 सायमारण्याद्ग्राममायन्ति, Maitr S 4, 1, 1 सायमरण्याद्ग्राममायन्ति [10] Die drei letzten Worte des Textes in T1 abgebrochen, daher der Accent von mir ergänzt. Kap S 46, 8 हरिण्ये हीयेरन् [11] So die Unterschrift des Capitels in Ch